- नाट्यशास्त्रस्य प्रणेता आचार्यः भरतमुनिः ।
- अनेन मुनिना ब्रह्मणः साक्षात् नाट्यवेदस्य उपलब्धिः कृता ।
- भरतमुनिः ऋग्वेदात् पाठ्यं, सामवेदात् गानं, यजुर्वेदात् अभिनयम्, अथर्ववेदात् रसञ्च सङ्गृह्य स्वशिष्येभ्यः नाट्यवेदं बोधयामास ।
- अस्मिन् सप्तविंशो अध्यायाः सन्ति ।

**Contd.....**

- अस्मिन् ग्रन्थे समस्तललितकलायाः यथा - सङ्गीतस्य, छन्दसः, अभिनयस्य, मनोभावस्य, रसस्य, विभावानुभावादीनाञ्च साङ्गोपाङ्गं सन्निवेशनमस्ति ।
- अस्य रसनिष्पत्तिविषयकचर्चा बह्वी प्रसिद्धा जाता ।
- साहित्यशास्त्रस्य उपजीव्यभूतोऽयं नाट्यशास्त्रनामको ग्रन्थः, विशेषतो रससम्प्रदायस्य भामहादिप्रणीतालङ्कारसम्बद्धग्रन्थानां, ध्वन्यालोक-काव्यप्रकाश-साहित्यदर्पण-दशरूपकप्रभृतीनां च इदं नाट्यशास्त्रम् आधृत्य एव निर्मिताः ।

**Contd….**

- एतेषु न केवलं भावसाम्यम्, अर्थसाम्यं, विषयसाम्यं वा, कदाचित् ते एव शब्दाः, तान्येव पदानि, ते एव च श्लोकाः यथातथ्येन बहुत्र उद्धृताः सन्ति ।
- अतः साहित्यशास्त्रस्य सम्यगध्ययनार्थं नाट्यशास्त्रस्य अध्ययनम् अतीवम् आवश्यकम् ।
- नैके आचार्याः अस्य शास्त्रस्य व्याख्यानानि व्यरचयन् । सत्सु बहुषु भट्टलोल्लटः, श्रीशङ्कुकः, भट्टनायकः, अभिनवगुप्तश्च गणनीयाः । एतेषाम् उल्लेखः मम्मटस्य काव्यप्रकाशे कृतः ।

- नाट्यशास्त्रस्य समेषु व्याख्यानेषु अभिनवगुप्तस्य 'अभिनवभारती' इति व्याख्यानं प्रामाणिकं सर्वसम्मानितञ्च ।
- अस्याः टीकायाः 'नाट्यवेदविवृतिः' इत्यपि नामान्तरमस्ति ।
- टीकायाम् अस्यां  नैकानां प्राचीननाट्याचार्याणां, सङ्गीताचार्याणां च मतस्य समीक्षा लभते ।
- भरतमुनेः नाट्यशास्त्रम् अध्येतुं, भरतस्य दृक्पथम् अवगन्तुं वा अभिनवभारती पठनीया एव ।

- अयं कश्मीरनरेशस्य जयापीडस्य सभापण्डितः ।
- अयं काव्यजगति रीतिसम्प्रदायस्य प्रवर्तकः ।
- ‘रीतिः आत्मा काव्यस्य' इति प्रतिपादयामास ।
- रीतिर्नाम विशिष्टा पदरचना ।

**Contd.........**

'राजतरङ्गिणी' नामके ग्रन्थे अस्य प्रशस्तिः इत्थं कृता -

"मनोरथः शङ्खदत्तश्चटकः सन्धिमांस्तथा ।

बभूवुः कवयस्तस्य वामनाद्याश्च मन्त्रिणः ।।"



- पञ्चसु अधिकरणेषु अयं ग्रन्थः विभक्तः ।
- अस्य ग्रन्थस्य प्रमुखाः अंशाः इत्थम् -

i. गुणालङ्कारयोः परस्परभेदाः ।
ii. वैदर्भी, गौडी, पाञ्चाली चेति तिस्रः रीतयः ।
iii. 'सादृश्याल्लक्षणा वक्रोक्तिः' इति वक्रोक्तेः लक्षणम् ।

- अयं राज्ञः अवन्तिवर्मणः सभापण्डितः आसीत् ।
- अयं 'ध्वन्यालोकः' इति काव्यशास्त्रग्रन्थं विरच्य ध्वनिसिद्धान्तस्य प्रवर्तकः अभूत् ।
- अयं ध्वन्यालोकः चतुर्षु उद्योतेषु विभक्तः ।
- अस्य विषयः कारिका, वृत्तिः, उदाहरणम् इति त्रिषु अंशेषु विभक्तः ।
- अनेन पूर्वप्रचलितान् वाद-प्रतिवादान् सम्यक् निरस्य 'काव्यस्य आत्मा ध्वनि' रिति प्रत्यपादि ।

**Contd…..**

- अनेनैव अलङ्कारादीनां समायोजनविषये सर्वमान्यसिद्धान्तमपि प्रतिपादितम् ।
- मूलतोऽयं ध्वनिसिद्धान्तः वैयाकरणस्फोटसिद्धान्तमूलक एव ।
- एवं व्याकरणशास्त्रात् 'ध्वनि' रूपमर्थं गृहीत्वा ग्रन्थेऽस्मिन् व्यङ्ग्यार्थस्य काव्ये विशेषमहत्वं प्रतिपादयता ध्वनिसिद्धान्तं निरूपितम् ।
- तदेव व्यङ्ग्यार्थः वाच्यार्थात् भिन्नं सत् काव्ये विशेषचमत्कारशालीति हेतोः काव्यात्मत्वं प्राप्नोति इति ।

- अभिनवगुप्ताचार्येण कृतं ध्वन्यालोकस्य व्याख्यानमेव 'लोचनम्' इति नाम्ना उपलभ्यते ।
- अस्य 'काव्यालोकलोचनम्' इत्यपि नामान्तरमस्ति ।
- अस्याः व्यख्यानस्य प्रसिद्धिः इत्थम् अस्ति -

‘नालोको लोचनं विना' सर्वथा सत्यमेव प्रतिभाति ।

**तथा च -**

“किं लोचनं विना (ऽ) लोको भाति चन्द्रिकयापि हि ।

तेनाभिनवगुप्तोऽत्र लोचनोन्मीलनं व्यधात् ।।”

**Contd..**

- लोचनटीकायाम् अस्याम् अनेन लोचनकारेण आलोककारस्य भावं सम्यक् प्रस्फोटितं तथा च स्वाभिमतमपि विस्तरेण प्रतिपादितम् ।
- अयं लोचनकारः प्रधानरूपेण तन्त्रशास्त्रस्य आचार्योऽस्ति ।
- काव्यशास्त्रे तस्य 'अभिनवभारती' ‘ध्वन्यालोकलोचनम्' इति द्वे टीके अतीवप्रसिद्धे गते ।

- अयं महाराष्ट्रप्रदेशस्य आसीत् ।
- काव्यशास्त्रसम्प्रदायसञ्चालने अस्य महद् वैशिष्ट्यम् अस्ति ।
- ‘काव्यमीमांसा' इति काव्यशास्त्रग्रन्थः रचितः अनेन ।
- ध्वनि-रस-अलङ्कार-रीति-वक्रोक्ति-भिन्नं कविप्रशिक्षणनिरतं कार्यमिदं काव्यमीमांसा ।
- अत्र कस्यापि न वा समर्थनं न वा विरोधः ।
- कविशिक्षणमेव अस्य लक्ष्यम् ।

**Contd……**

- विशालकायग्रन्थोऽयम् । अष्टादशाधिकरणेषु विभक्तः । किन्तु सम्प्रति प्रथमाधिकरणमेव उपलभ्यते यत्र अष्टादश अध्यायाः सन्ति ।
- कवीनां मार्गदर्शकः अयं ग्रन्थः ।
- कविशिक्षणधिया काव्यपुरुष-साहित्यविद्यावधू-काल्पनिक-रूपकमाध्यमेन प्राचीनकालात् प्रचलन्ती परम्परा एव अत्र सङ्गृहीता ।
- अत्रत्यं काव्यप्रतिभावैदुष्यं च प्रशंसनीयमेव ।

- राजानकः कुन्तकः इति प्रसिद्धोऽयम् ।
- 'वक्तोक्तिजीवितम्' इत्यस्मिन् ग्रन्थे 'वक्रोक्तिः' इति सिद्धान्तं प्रत्यपादयत् ।
- चतुर्षु उन्मेषेषु विभक्तः अयं ग्रन्थः ।
- अस्य विषयः कारिका, वृत्तिः, उदाहरणम् इति त्रिषु अंशेषु विभक्तः ।

**Contd……**

- ‘वक्रोक्तिः काव्यजीवितम्' इति प्रतिपादितम् अनेन ।
- ‘वक्रोक्तिरेव वैदग्ध्यभङ्गीभणितिरुच्यते' इति प्रतिष्ठापितम् ।
- लोकोत्तर-चमत्कारकार्यः वैचित्र्यस्य सिद्धिरेव अस्य ग्रन्थनिर्माणस्य लक्ष्यम् ।
- अस्याः वक्रोक्तेः प्रधानतया षड् भेदाः सन्ति इति उररीचकार ।

- दशरूपकभेदान् अधिकृत्य रचितोऽयं ग्रन्थः ।
- भरतमुनेः नाट्यशास्त्रम् आधारीकृत्य ग्रन्थममुं रचनाञ्चकार ।
- ग्रन्थेऽस्मिन् **300** कारिकाः चतुर्षु प्रकाशेषु विभक्ताः ।

**Contd……**

- ‘धनिकः’ इति अस्य भ्राता एव ‘अवलोकः’ इति अस्य ग्रन्थस्य व्याख्यानं व्यरचयत् ।
- नाट्यशास्त्रग्रन्थेषु नाट्यशास्त्रानन्तरं दशरूपकस्य महत् प्राधान्यं वर्तते ।
- ग्रन्थेऽस्मिन् नृत्यं, नृत्तं, लास्यं, ताण्डवं, पञ्चसन्धयः, नायिका-नायकयोः लक्ष्णं, रूपकप्रयोगविधानं, दशरूपकाणां लक्षणम् इत्यादीनां बहूनां विषयानां चर्चा कृता ।

